४४७५

# अथ श्रीसत्यनारायणपूजासटिप्पणी सार्थकथा च

श्रीगणेशायनमः ॥ ॥ अथसत्यनारायणपूजाप्रारभ्यते ॥ ॥ प्रतिपौर्णमास्याममावा
स्यायांसूर्यपर्वदिने संक्रांतौ व्यतीपातादिपर्वसु रविवारे यस्मिन्कस्मिन्दिने मनउत्सा
हेवा उपोष्य नित्यविधिंकृत्वा सायाह्नेस्नात्वा पूजास्थानमागत्य शुद्धासनेउपविश्य
आचम्यपवित्रपाणिः प्राणानायम्य देशकालौसंकीर्त्य ममसकुटुंबस्यसपरिवारस्य द्विप
दचतुष्पदसहितस्य क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं सकलदुरितोपशमनसर्वाप
च्छांतिपूर्वकसकलाभीष्टसिद्ध्यर्थंच यथासंपादितसामग्र्या वरुणब्रह्मविष्णुरुद्रगौरील
क्ष्मीदेवतादित्यादिनवग्रहदेवतेंद्राद्यष्टौलोकपालदेवतापूजनपूर्वकं पूर्वांगीकृतसत्यनारा
यणपूजनं कथाश्रवणंचकरिष्ये ॥ तथाच आसनादिदिग्बंधादिकलशपूजनं ( शंखार्चनं )
घंटाराधनंच करिष्ये ॥ ( शरीरशुद्ध्यर्थंपुरुषसूक्तन्यासंचकरिष्ये ) तत्रादौनिर्विघ्नता
सिद्ध्यर्थंमहागणपतिपूजनंचकरिष्ये ॥ गणानांत्वाशौ०ॐगणानांत्वा० हेहेरंबत्वमेह्ये
हिअंबिकात्र्यंबकात्मज ॥ सिद्धिबुद्धियुतत्र्यक्षसर्वलोकपितःपितः ॥ नागास्यनागहा

त्वंगणनाथचतुर्भुज ॥ भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वधैः ॥ आवाहयामिपूजार्थं रक्षार्थंचममक्रतोः ॥ इहागत्यगृहाणत्वंपूजांरक्षचमेक्रतुम् ॥ श्रीमहागणपतयेनमः अ स्मिन्पूगीफलेसांगंसपरिवारंमहागणपतिंआवाहयामि ॥ ( इत्यावाह्य श्रीमहागणप तयेनमइतिनाममंत्रेणध्यानासनादिभिःषोडशोपचारैःपूजयेत् ॥ ) श्रीम० ॥ आसना र्थेअक्षतान्समर्पयामि ॥ श्रीम०पाद्यंस० ॥ श्रीम०अर्घ्यंस० ॥ श्रीम०आचमनीयं स० ॥ श्रीम०स्नानंस० ॥ स्नानानंतरंआच० ॥ श्रीम०वस्त्रोपवस्त्रार्थेअक्षतान्स० ॥ श्रीम०यज्ञोपवीतार्थेअक्ष० ॥ श्रीम०विलेपनार्थेचंदनंस० ॥ श्रीम०अलंकरणार्थेअ क्ष० ॥ हरिद्राकुंकुमंसिंदूरंचस० ॥ श्रीम० पुष्पाणिस० ॥ श्रीम०धूपंस० ॥ श्रीम० दीपंस० ॥ श्रीम०नैवेद्यार्थे गुडनैवेद्यंस० ॥ प्राणाय० ६ ॥ नैवेद्यमध्येप्राशनार्थे पानीयंस० ॥ पुनः प्राणाय० ६ ॥ उत्तरापोशनंस० ॥ हस्तप्रक्षालनंस० ॥ मुख प्रक्षालनंस० ॥ करोद्वर्तनार्थेचंदनंस० ॥ श्रीम०मुखवासार्थेपूगीफलतांबूलंस० ॥

श्रीम० [illegible]पुष्प[illegible]ांस० ॥ श्रीमे०नारिकेलफलस०॥श्रीम०दूर्वांकुरान्स०॥ श्री
[illegible]ांस० ॥ श्रीम०प्रदक्षिणांस० ॥ श्रीम० मंत्रपुष्पंस० वक्रतुं०श्रीम०प्रार्थ
[illegible] ॥ अनयाविघ्नेश्वरपूजयाविघ्नहर्तामहागणपतिःप्रीयतांनमम ॥ पृथ्वीतिमं
[illegible]० ॥ आसनायनमः ॥ कमलासनायनमः ॥ कूर्मासनायनमः ॥ ( अत्रैवपुरुषसूक्त
न्यासंकुर्यात् ) ततः ॥ कलशस्यमुखेवि० ( इतिकलशंसंपूज्य ) ॥ ( शंखपूजनं )
आगमार्थंतुदेवानां० ( इतिघंटांसंपूज्यघंटानादंकृत्वा ) अपवित्रःपवित्रो० ( इतिपू
जाद्रव्याणिसंप्रोक्ष्यआत्मानं चप्रोक्षेत् ) ॥ अथवरुणपूजनं तत्रादौकलशस्थापनम् तद्य
था ) ॥ ॐमहीद्यौः० ॥ जगदाश्रयभूतात्मासर्वेषांकामदासदा ॥ कर्मांगेषुसदातिष्ठ
भूमिदेविनमोस्तुते ॥ इतिभूमिंस्पृष्ट्वा ॐओषधयःसं० ॥ औषध्योयज्ञियाःपुण्याजी
वानामादिकारणम् ॥ तस्मादासांप्रविरणात्संतुकामाःसदामम ॥ इतिधान्यानि ॥ ॐ
आकलशेषुधा० ॥ कलशःकमनीयश्चलक्ष्म्यायोविधृतःपुरा ॥ तस्मादेनंप्रयत्नेनकल

शंस्थापयाम्यहम् ॥ इतिधान्योपरिकलशस्थापनं ॥ ॐइमंमेगंगेय० ॥ गंगेचयमुने
चैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुरु ॥ इतिकलशेजलम् ॥
ॐगंधद्वारांदुरा० ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरम् ॥ हृदयानंदनंचारुकलशे
प्रक्षिपाम्यहम् ॥ इतिचंदनम् ॥ ॐकांडात्कांडात्प्र० ॥ कांडेकांडेधिरोहंतिअजराश्चा
मृताःसदा ॥ तस्मादेताःप्रयत्नेनकलशेप्रक्षिपाम्यहम् ॥ इतिदूर्वाः ॥ ॐअश्वत्थेवो
निष० ॥ अश्वत्थचूतप्लक्षाद्याःपल्लवानिर्मिताःपुरा ॥ पवित्राःपुण्यभाजस्तान्कलशेप्र
क्षिपाम्यहम् ॥ पंचपल्लवाः " ॐयाःफलिनीर्याअ० ॥ फलेनफलितंसर्वंत्रैलोक्यंसच
राचरम् ॥ तस्मादेतद्धिसुफलंकलशेप्रक्षिपाम्यहम् ॥ फलम् ॥ ॐसहिरत्नानिदाशु०
[illegible]वैडूर्यपमाणि[illegible]नीलपुष्करराजकाः ॥ ख्यातानिपंचरत्नानिकलशेप्रक्षिपाम्यहम् ॥
रत्नानि ॥ ॐहिरण्यरूपःसहि० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपु
ण्यफलद तःशांतिंप्रयच्छमे ॥ हिरण्यम् ॥ ॐयुवासुवासाःप० ॥ अक्षताःपरमादि

व्याःसर्वकामफलप्रदाः ॥ मयानिवेदिताभक्त्याकलशेसंतुसर्वदा ॥ अक्षताः ॥ ॐ पूर्णादर्विपराप० ॥ अक्षतैःपूरितंदिव्यंसर्वसंपत्प्रपूरकम् ॥ पूर्णपात्रमिदंशुद्धंकलशेस्थापयाम्यहम् ॥ पूर्णपात्रं ॥ ॐतत्वायामिब्रह्मणा० ॥ पाशहस्तंचवरुणमंभसांपतिमीश्वरम् ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यताम् ॥ श्रीवरुणायनमः ॥ अस्मिन्कलशेवरुणंसांगंसपरिवारंआवाहयामि ॥ ( इत्यावाह्य ॥ श्रीवरुणायनम इतिनाममंत्रेणध्यानावाहनादिभिःषोडशोपचारैःपूजयेत् ॥ ततः नवग्रहादिमंडलदेवतानांस्थापनम् पूजनंच ॥ तद्यथा) ॥ ॐआकृष्णेन० ॥ जपाकुसुमसंकाशंकाश्यपेयंमहाद्युतिम् ॥ तमोरिंसर्वपापघ्नंप्रणतोस्मिदिवाकरम् ॥ श्रीसूर्यायनः ॥ अस्मिन् पूगीफलेसूर्यआहवाहयामि ॥ ॐआप्यायस्वस० ॥ दधिशंखतुषाराभंक्षीरोदार्णवसंभवम् ॥ नमामिशशिनंसोमंशंभोर्मुकुटभूषणम् ॥ श्रीसोमायनमः ॥ अस्मिन्पूगीफलेसोमंआवा० ॥ ॐअग्निर्मूर्धा० ॥ धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभम् ॥ कुमा

रंशक्तिहस्तंचमंगलंप्रणमाम्यहम् ॥ श्रीभौमायनमः ॥ अस्मिन्पूगीफलेभौमंआ० ॥ ॐउद्बुध्यध्वं० ॥ प्रियंगुकलिकाश्यामंरूपेणाप्रतिमंबुधम् ॥ सौम्यंसौम्यगुणोपेतंतंबुधंप्रणमाम्यहम् ॥ श्रीबुधायनमः ॥ अस्मिन्पूगीफलेबुधंआ० ॥ ॐबृहस्पतेअ० ॥ देवानांचऋषीणांचगुरुंकांचनसन्निभम् ॥ बुद्धिभूतंत्रिलोकेशंतंनमामिबृहस्पतिम् ॥ श्रीगुरवेनमः ॥ अस्मिन्पूगीफलेगुरुम्आ० ॥ ॐशुक्रःशुशु० ॥ हिमकुंदमृणालाभंदैत्यानांपरमंगुरुम् ॥ सर्वशास्त्रप्रवक्तारंभार्गवंप्रणमाम्यहम् ॥ श्रीशुक्रायनमः ॥ अस्मिन्पूगीफलेशुक्रंआ० ॥ ॐशमग्निरग्नि० ॥नीलांजनसमाभासंरविपुत्रंयमाग्रजम्॥ छायामार्तंडसंभूतंतंनमामिशनैश्चरम् ॥ श्रीशनैश्चरायनमः ॥ अस्मिन्पूगीफलेशनैश्चरंआवा० ॥ ॐकयानश्चि० ॥ अर्धकायंमहावीर्यंचंद्रादित्यविमर्दनम् ॥ सिंहिकागर्भसंभूतंतंराहुंप्रणमाम्यहम् ॥ श्रीराहवेनमः ॥ अस्मिन्पूगीफलेराहुंआवा० ॥ ॐकेतुंकृण्वन्न० ॥ पलाशपुष्पसंकाशंतारकाग्रहमस्तकम् ॥ रौद्रंरौद्रात्मकंघोरंतंकेतुंप्रणमा

म्यहम् ॥ श्रीकेतवेनमः ॥ अस्मिन्पूगीफलेकेतुंआवा० ॥ ॐब्रह्मजज्ञानं० ॥ नमो
रजोजुषेसृष्टौस्थितौसत्वमयायच ॥ तमोमयायसंहारेविश्वरूपायवेधसे ॥ श्रीब्रह्मणेन
मः ॥ अस्मिन्पूगीफलेब्रह्माणंआ० ॥ ॐइदंविष्णु० ॥ शांताकारंभु० ॥ श्रीविष्ण
वेनः ॥ अस्मिन्पूगीफलेविष्णुंआवा० ॥ ॐनमःशंभवाय० ॥ ॐत्र्यंबकंयजा० ॥
रुद्राक्षकंकणलसत्करदंडयुग्मंभालांतरालचितभस्मधृतत्रिपुंड्रं ॥ पंचाक्षरींपरिपठन्वर
मंत्रराजंध्यायेत्सदापशुपतिंशरणंव्रजेहम् ॥ श्रीरुद्रायनमः ॥ अस्मिन्पूगीफलेरुद्रंआ
वाह० ॥ ॐगौरीर्मिमा० ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रा
यैनियताःप्रणताःस्मताम् ॥ श्रीगौर्यैनमः ॥ अस्मिन्पूगीफलेगौरींआवा० ॥ ॐसक्तु
मिव० ॥ आलयंतेहिकथितंकमलंकमलालये ॥ विमलेकमलेह्यस्मिन्स्थितिंत्वंकृपया
कुरु ॥ श्रीलक्ष्म्यैनमः ॥ अस्मिन्पू०लक्ष्मींआ० ॥ ॐइंद्रंवोविश्वत० ॥ सर्वलोका
धिपंश्रेष्ठंदेवर्षीणांचपालकम् ॥ पूर्वेदिक्पालकंदेवराजंवैस्थापयाम्यहम् ॥ श्रीइंद्रायन

मः ॥ अस्मि०इंद्रंआ० ॥ ॐअग्निंदूतंवृणीमहे० ॥ त्रिपादंमेषवाहंचसप्तहस्तंद्विशीर्षकम् ॥ आग्नेय्यांस्थापयाम्यत्रअग्निपूरुषमुत्तमम् ॥ श्रीअग्नयेनमः ॥ अस्मिन्पू० अग्निंआ० ॥ ॐयमायसोम० ॥ अंतकःसर्वलोकानांधर्मराजइतिश्रुतः ॥ अतस्त्वां स्थापयाम्यत्रदक्षिणस्यांस्थिरोभव ॥ श्रीयमायनमः ॥ अस्मिन्पू०यमंआ० ॥ ॐ मोषुणःपरा० ॥ नैर्ऋत्यांवसतिर्यस्यघोररूपीसदाहियः ॥ निर्ऋतिंस्थापयाम्यत्रनैर्ऋत्यांमंडलेशुभे ॥ श्रीनिर्ऋतयेनमः ॥ अस्मिन्पू०निर्ऋतिंआ० ॥ ॐतत्वायामि० ॥ अपांपतिंपाशधरंयादसामधिपंशुभम् ॥ वरुणंस्थापयाम्यत्रवारुण्यांमंडलेशुभे ॥ श्री वरुणाय० ॥ अ०वरुणंआ० ॥ ॐवायोशतंहरी० ॥ आशुगंस्पर्शबोधंचगंधवाहंसुशीतलम् ॥ मंडलेस्थापयामीहवायव्यांवायुमुत्तमम् ॥ श्रीवायवेन० ॥ अ०वायुं-आ० ॥ ॐआप्यायस्व० ॥ क्षीरोदार्णवसंभूतंलक्ष्मीबंधुंनिशाकरम् ॥ मंडलेस्थापयाम्यत्रसोमंसर्वार्थसिद्धये ॥ श्रीसोमाय० ॥ अस्मिन्पू०सोमंआ० ॥ ॐ[illegible]

॥ ईशानीपालकंश्रेष्ठंसर्वलोकभयंकरप्रभुं ॥ मंडलेस्थापयामीहईशानं[illegible]
॥ श्रीईशानायनमः ॥ अस्मिन्पू०ईशानंआ० ॥ ( इतिनवग्रहादिसर्वादेवताआवाह्य
॥ श्रीआदित्याद्यावाहितदेवताभ्योनमः इतिसंकलितनाममंत्रेणध्यानावाहनादिषोड
शोपचारैःपूजयेत् ॥ ॥ अथसत्यनारायणदेवंस्वपुरतस्ताम्रपात्रेसंस्थाप्यपूजयेत् ॥
तद्यथा हस्तेपुष्पंगृहीत्वाध्यानंकुर्यात् ॥ ) शांताकारं० ॥ ध्यायेत्सत्यंगुणातीतंगुणं
त्रयसमन्वितम् ॥ लोकनाथंत्रिलोकेशंकौस्तुभाभरणंहरिम् ॥ नीलवर्णंपीतवासंश्रीव
त्सपदभूषितम् ॥ गोविंदंगोकुलानंदंब्रह्माद्यैरभिपूजितम् ॥ श्रीसत्यनारायणायनमः
ध्यानम् ॥ ॐसहस्र० ॥ आगच्छदेवदेवेशतेजोराशेजगत्पते ॥ क्रियमाणांमयापूजां
गृहाणसुरसत्तम ॥ श्रीसत्यनारायणायनमः ॥ आवाहनम् ॥ ॐपुरुषए० ॥ नानार
त्नसमायुक्तंकार्तस्वरविभूषितम् ॥ आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीसत्य०
आसनार्थेअथतान्समर्पयामि ॥ ॐएतावानस्य० ॥ नारायणनमस्तेस्तुनरकार्णवतार

स.ना.

॥ ५ ॥

क ॥ पाद्यंगृहाणदेवेशममसौख्यंविवर्धय ॥ श्रीसत्य०पाद्यंस० ॥ ॐत्रिपादूर्ध्व० ॥ व्य
क्ताव्यक्तस्वरूपायहृषीकपतयेनमः ॥ मयानिवेदितोभक्त्याअर्घोयंप्रतिगृह्यताम् ॥ श्री
सत्य ०अर्घ्यंस० ॥ ॐतस्माद्वि० ॥ मंदाकिन्यास्तुयद्वारिसर्वपापहरंशुभम् ॥ तदिदं
कल्पितंदेवसम्यगाचम्यतांत्वया ॥ श्रीसत्य०आचमनीयंस० ॥ ॐयत्पुरु० ॥ गंगा
सरस्वतीरेवापयोष्णीनर्मदाजलैः ॥ स्नापितोसिमयादेवअतःशांतिंप्रयच्छमे ॥ श्रीस
त्य० ॥ स्नानं० ॥ ॥ अथपंचामृतस्नानम् ॥ ॐआप्यायस्व० ॥ कामधेनोःसमुद्भूतं
देवर्षिपितृतृप्तिदम् ॥ पयोददामिदेवेशप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीसत्य० ॥ पयःस्नानंस०
पयःस्नानानंतरेशुद्धोदकस्नानंस० ॥ सकलपूजार्थेअक्षतान्समर्पयामि ॥ ॐदधिक्रा
व्णो० ॥ चंद्रमंडलसंकाशंसर्वदेवप्रियंदधि ॥ स्नानार्थंतेमयादत्तंप्रीत्यर्थंप्रतिगृह्यताम् ॥
॥ श्रीसत्य० ॥ दधिस्नानंस०दधिस्नानानंतरंशु०सकलपू० ॥ ॐघृतंमिमिक्षे० ॥ घृत
कुंभसमायुक्तेघृतयोनेघृताश्रय ॥ घृतम्[illegible] तद्दास्यामिघृतंस्नाना[illegible]ताम् ॥ श्रीसत्य०

पू.

॥ ५ ॥

॥ घृतस्नानंस० घृतस्नानानंतरंशु० सकल० ॥ ॐमधुवाता० ॥ सर्वौषधिसमुद्भूतंपीयू
षसदृशंमधु ॥ स्नानार्थंतेप्रयच्छामिगृह्यतांपरमेश्वर ॥ श्रीसत्य० ॥ मधुस्नानंस० ॥ म
धुस्नानानंतरंशु० सक० ॥ ॐस्वादुःपव० ॥ इक्षुदंडसमुद्भूतदिव्यशर्करयाह्यहं ॥
स्नापयामिमहाभक्त्याप्रीतोभवसुरेश्वर ॥ श्रीसत्य० ॥ शर्करास्नानंसमर्प० ॥ शर्करास्ना
नानंतरंशु० सक० ॥ ॐकनिक्रद० ॥ तैलेलक्ष्मीर्जलेगंगायतस्तिष्ठतिवैप्रभो ॥ त
न्मांगलिकस्नानार्थंजलतैलेसमर्पये ॥ श्रीसत्य० ॥ मांगलिकस्नानंस० ॥ मांगलिस्ना
नानंतरंशु० सक० ॥ ॐआपोहिष्ठा० ॥ ॐगंधद्वारां० ॥ कर्पूरैलासमायुक्तंसुगंधद्र
व्यसंयुतम् ॥ गंधोदकेनस्नपनंप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीसत्य० ॥ गंधोदकस्नानंस
म० गंधोदकस्नानानंतरंशु० ॥ वस्त्रोपवस्त्रार्थेअक्षतान्स० ॥ यज्ञोपवीतार्थेअक्षतान्
स० ॥ विलेपनार्थेचंदनंस० ॥ अलंकरणार्थेअक्ष० ॥ पूजार्थेपुष्पाणिस० ॥ धूपं
स० ॥ दीपंस० ॥ नैवेद्यार्थेपंचामृतशेषनैवेद्यंस० ॥ प्राणाय० ॥ अपानाय० व्याना

य० उदानाय० समानाय० ब्रह्मणे० ॥ नैवेद्यानंतरंआचमनीयम्स० ॥ हस्तप्रक्षालनम्स० ॥ मुखप्रक्षालनंस० ॥ करोद्वर्तनार्थेचंदनंस० ॥ मुखवासार्थेपूगीफलतांबूलंस० ॥ स्वर्णपुष्पदक्षिणांस० ॥ शेषोपचारार्थेनमस्कारंस० ॥ अनेनपूर्वाराधनेन श्रीसत्यनारायणःप्रीयतांनमम ॥( उत्तरेनिर्माल्यंविसृज्य महाभिषेकंकुर्यात् ) ॥ ॥ महाभिषेकः ॥ ॥ श्रीसत्य०महाभिषेकस्नानंस० ॥ स्नानानंतरंआचमनीयंस० ॥ ॐ तदस्तुमित्रा० श्रीसत्यनारायणायनमः सुप्रतिष्ठितमस्तु ( इतिदेवंपीठमध्येसंस्थाप्य ) ॥ ॐतंयज्ञं० ॥ वेदसूक्तसमायुक्तेयज्ञसामसमन्विते ॥ सर्ववर्णप्रदेदेववाससीप्रतिगृह्यताम् ॥ श्रीसत्य० ॥ वस्त्रोपवस्त्रेस० ॥ (तदभावेअक्षतान्स०) ॥ ॐतस्माद्यज्ञा० ॥ ब्रह्मविष्णुमहेशैश्चनिर्मितंब्रह्मसूत्रकम् ॥ यज्ञोपवीतदानेनप्रीयतांकमलापतिः ॥ श्रीसत्य० ॥ यज्ञोपवीतंस० ॥ ॐतस्माद्यज्ञात्सर्वहुतऋचः० ॥ श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरम् ॥ विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यताम् ॥ श्रीसत्य०चंदनंस० ॥ कुंकुम्

त्रताडपत्रंहरिद्राकुंकुमांजनम् ॥ सिंदूरादिप्रदास्यामिसौभाग्यंदेहिमेव्ययम् ॥ श्रीमं
न्महालक्ष्म्यैनमः सौभाग्यद्रव्याणिसमर्पयामि ॥ ॐअहिरिव०॥ ज्योत्स्नापतेनमस्तु
भ्यंनमस्तेविश्वरूपिणे ॥ नानापरिमलद्रव्यंगृहाणपरमेश्वर ॥ श्रीसत्य० ॥ परिमलद्र
व्यंस० ॥ अक्षताःपरमादिव्याःसर्वकामफलप्रदाः ॥ पूजासंरक्षणार्थायईश्वरप्रतिगृह्य
ताम् ॥ श्रीसत्य० ॥ अक्षतान्सम० ॥ ॐतस्मादश्वा० ॥ माल्यादीनिसुगंधीनिमाल
त्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यताम् ॥ श्रीसत्य० ॥ पुष्पाणि
स० ॥ ( अत्रैवविष्णुसहस्रनामभिःकेशवादिचतुर्विंशतिनामभिर्वातुलसीपत्रार्पणंकुर्या
त् ॥ ) ॐयत्पुरुषंव्य० ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानां
धूपोयंप्रतिगृह्यताम् ॥ श्रीसत्य० ॥ धूपंसम० ॥ ॐब्राह्मणोस्य० ॥ साज्यंचवर्तिसंयु
क्तंवन्हिनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ श्रीसत्य० ॥ दीपंस०
॥ ॐचंद्रमाम०॥घृतपक्वंहविष्यान्नंपायसंचसशर्करम् ॥कदलीदुग्धसंयुक्तंनैवेद्यंप्रतिगृह्य

ताम् ॥ श्रीसत्य० ॥ नैवेद्यार्थेसपादभक्ष्यनैवेद्यंस० ॥ अमृतोपस्तरणमसि ॥ प्राणा
य० ॥ अपानाय० ॥ व्यानाय० ॥ उदानाय० ॥ समानाय० ॥ ब्रह्मणे० ॥ मध्ये
प्राशनार्थेपानीयंस० ॥ पुनःप्राणाय० ६ ॥ उत्तरापोशनंस० ॥ हस्तप्रक्षालनंस०
॥ मुखप्रक्षालनंस० ॥ करोद्वर्तनार्थेचंदनंस० ॥ सर्वपापहरंदिव्यंगांगेयंनिर्मलंजलम् ॥
आचमनंमयादत्तंगृह्यतांपुरुषोत्तम ॥ श्रीसत्यना० ॥ आचमनीयंसम० ॥ पूगीफलंम
हद्दिव्यंनागवल्लयादलैर्युतम् ॥ कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् ॥ श्रीसत्य० ॥
तांबूलंस० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रय
च्छमे ॥ श्रीसत्य० ॥ दक्षिणांस० ॥ इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसुफ
लावाप्तिर्भवेज्जन्मनिजन्मनि ॥ फलेनफलितंसर्वंत्रैलोक्यंसचराचरम् ॥ तस्मात्फलप्र
दानेनसफलाश्चमनोरथाः ॥ श्रीसत्य० ॥ फलार्थेअमुकफलंस ॥ ॐश्रियेजातःश्रिय
आनिरी० ॥ चतुर्वर्तिसमायुक्तंघृतेनचसुपूरितम् ॥ नीराजनेनसंतुष्टोभवत्वयेवजगत्पतिः

॥ श्रीसत्य० ॥ महानीराजनंसम० ॥ ॐनाभ्याआ० ॥ नमोस्त्वनं० ॥ नमःसर्वहि
तार्थायजगदाधारहेतवे ॥ साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः ॥ श्रीसत्य०॥नमस्का
रंस० ॥ ॐसप्तास्या० ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यं
तुप्रदक्षिणपदेपदे ॥ श्रीसत्य० ॥ प्रदक्षिणांस० ॥ ॐयज्ञेन० ॥ विद्याबुद्धिधनैश्वर्य
पुत्रपौत्रादिसंपदः ॥ पुष्पांजलिप्रदानेनदेहिमेईप्सितंवरम् ॥ श्रीसत्य० ॥ मंत्रपुष्पां
जलिंस० ॥ ॥ अथप्रार्थना ॥ ॥ यन्मयाभक्तियुक्तेनपत्रंपुष्पंफलंजलम् ॥ निवेदितं
चनैवेद्यंतद्गृहाणानुकंपया ॥ १ ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन ॥ यत्पूजितं
मयादेवपरिपूर्णंतदस्तुमे ॥ २ ॥ अमोघंपुंडरीकाक्षंनृसिंहंदैत्यसूदनम् ॥ हृषीकेशंजग
न्नाथंवागीशंवरदायकम् ॥ ३ ॥ गुणत्रयंगुणातीतंगोविंदंगरुडध्वजम् ॥ जनार्दनंजना
तीतंजानकीवल्लभंहरिम् ॥ ४ ॥ प्रणमामिसदाभक्त्यानारायणमतःपरम् ॥ दुर्गमेवि
षमेघोरेशत्रुभिःपरिपीडिते ॥ ५ ॥ निस्तारयस्वसर्वेषुतथानिष्टफलेषुच ॥ नामान्येता

निसंकीर्त्यईप्सितंफलमाप्नुयात् ॥ ६ ॥ सत्यनारायणंदेवंवंदेहंकामदंप्रभुम् ॥ लीलया विततंविश्वंयेनतस्मैनमोनमः ॥ ७ ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ८ ॥ श्रीसत्य० ॥ प्रार्थनापुष्पंस० ॥ अनेनयथाज्ञानेनयत्कृतपूजनेनश्रीसत्यनारायणःप्रीयतांनमम ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ ॥

## आरतीसत्यनारायणाची.

( आरती सप्रेम जयजय विठ्ठल या चा०. )

जय जय दीनदयाळा सत्यनारायण देवा ॥ पंचारति ओंवाळूं श्रीपति तुज भक्तीभावा ॥ ध्रु० ॥ विधियुक्त पूजुनी करिती पुराण श्रवण ॥ परिमळद्रव्यांसहित पुष्पमाळा अर्पून ॥ घृतयुक्तशर्करामिश्रित गोधूमचूर्ण ॥ प्रसाद भक्षण करितां प्रसन्न तूं नारायण ॥ जय० ॥ १ ॥ शतानंदविप्रें पूर्वीं व्रत हें आचरिलें॥दरिद्र दवडुनिअंतीं त्यातें मोक्षपदा नेलें॥तैंपासुनि हें व्रत या कलियुगीं सकळां श्रुत झालें ॥ भावार्थें पू-

जितां बहुतां इच्छित लाधलें ॥ जय० ॥ २ ॥ साधूवैश्यें संततिसाठीं तुजला प्रार्थीलें ॥ इच्छित पुरतां मदांध होउनि व्रत न आचरिलें ॥ त्यापापानें पडुनि संकटीं दुःखहि भोगीलें ॥ स्मृति होउनि आचरितां व्रत त्या तुवांचि उद्धरिलें ॥ जय० ॥ ३ ॥ प्रसाद विसरुनि पतिभेटीला कलावती गेली ॥ क्षोभ तुझा होतांचि तयाची नौका बूडाली ॥ अंगध्वजरायासी यापरि दुःखस्थिति आली ॥ मृतवार्ता शतपुत्रांची सत्वर कर्णीं परिसीली ॥ जय० ॥ ४ ॥ पुनरपि पूजुनि प्रसाद ग्रहण करितां तत्क्षणीं ॥ पतिची नौका तरली देखे कलावती नयनीं ॥ अंगध्वजरायासी पुत्र भेटति येऊनी ॥ ऐसा भक्तां पावसि संकटीं तूं चक्रपाणी ॥ ज०॥ ॥ ५ ॥ अगाध महिमा जाणुनि तव व्रत जे जन आचरती ॥ इच्छित पुरविसी त्यांचें देउनि संतति संपत्ती ॥ संहरती भयदुरितें सर्वहि बंधनें तुटती ॥ राजारंकां समान मानुनी पावसि श्रीपती ॥ जय० ॥ ६ ॥ ऐसा तव व्रत महिमा अपार वर्णूं मी कैसा ॥ भक्तिपुरःसर आचरती त्यां पावसि जगदीशा ॥ भक्तांचा कनवाळू कल्पद्रुम तूं सर्वेशा ॥ मोरेश्वरसुत वासुदेव तुज विनवी भवनाशा ॥ जय० ॥ ७ ॥

---

ॐनमःश्रीगणेशाय ॥ श्रीव्यास ह्मणतात– कोणे एके समयीं नैमिषारण्यांत शौनक आदि करून सर्व ऋषी, सूतें नांवाच्या पौराणिकाला प्रश्न करिते झाले॥१॥ ऋषी ह्मणाले– हे महामुने सूता, कोणतें व्रत किंवा तप

॥ अथकथा ॥ ॥ श्रीव्यासउवाच ॥ एकदानैमिषारण्येऋषयःशौनका- दयः ॥ पप्रच्छुर्मुनयःसर्वेसूतंपौराणिकंखलु ॥ १ ॥ व्रतेनतपसाकिंवा प्राप्यतेवांछितंफलं ॥ तत्सर्वंश्रोतुमिच्छामःकथयस्वमहामुने ॥ २ ॥

केलें असतां इच्छित फल प्राप्त होईल तें ऐकण्याची आमची इच्छा आहे. तर तें सर्व कृपा करून सांगा ॥ २ ॥

---

१ हिमालयाच्या उतरणीपासून बऱ्याच अंतरावर हें नैमिषनांवाचें अरण्य आहे. यास हें नांव पडण्याचें कारण. वराहपुराणांत अशी कथा आहे कीं, एके समयीं दानवांनीं पीडित गौरमुखऋषि तपश्चर्येस निवांत व पवित्र स्थान पाहिजे ह्मणून श्रीविष्णूकडे गेला, तेव्हां श्रीविष्णूनें सर्व दानव क्षणांत मारून गौरमुखमुनीस सांगितलें कीं, मीं हें दानवांचेंसैन्य या अरण्यांत निमिषमात्रांत मारिलें ह्मणून या अरण्याचें नांव नैमिष असें पडून पुढें हें विशेषतः ब्राह्मणांस तपश्चर्येस अत्यंत योग्य व पवित्र असें होईल. आतां याच अरण्यास नैमिश असेंहि जें ह्मणतात त्याचें कारण. वायुपुराणांत अशी कथा आहे कीं, सर्व ऋषी एकवेळ ब्रह्मदेवाकडे जाऊन त्यांनीं तपश्चर्या करण्याला उत्तम स्थान कोणतें ह्मणून त्याला प्रश्न केला, तेव्हां ब्रह्मदेवानें अंमळ विचार करून लगेच एक मनोमय चक्र उत्पन्न केलें, आणि ऋषींनां ह्मणाला, हें चक्र मी सोडतों. याची गति ज्या ठिकाणीं कुंठित होईल तोच प्रदेश तपश्चर्या करण्याला चांग—

हा प्रश्न ऐकून सूत ह्मणाला, ऋषी हो, तुह्मीं जो प्रश्न केला हाच पूर्वी देवर्षि नारद यानें भगवान् लक्ष्मीपति विष्णु याला केला होता, तेव्हां विष्णूनें नारदाला जें सांगितलें तेंच मी तुह्माला सांगतों. तें अंतःकरण स्वस्थ करून ऐका॥३॥कोणी एका कालीं जो नेहमी योगधारण करणारा नारद तो केवळ लोकांवर अनुग्रह

॥ सूतउवाच ॥ ॥ नारदेनैवसंपृष्टोभगवान्कमलापतिः ॥ सुरर्षयेय थैवाहतच्छृणुध्वंसमाहिताः ॥ ३ ॥ एकदानारदोयोगीपरानुग्रह कांक्षया ॥ पर्यटन्विविधाँल्लोकान्मर्त्यलोकमुपागतः ॥ ४ ॥

करावा ह्याच इच्छेनें स्वर्गादि अनेक लोकांत संचार करीत होत्साता प्रत्येक ठिकाणीं तेथील लोकांची स्थिति कशी आहे ती पहात पहात या मृत्युलोकांत आला ॥४॥

---

ला असें समजा. असें बोलून, ब्रह्मदेवानें तें चक्र सोडलें. व ऋषि त्याच्या मागून निघाले. तें चक्र या ठिकाणीं कुंठित झालें. संस्कृतांत चक्राच्या धारेला नेमि ह्मणतात, ती येथें निर्वेग झाली ह्मणून या प्रदेशाला नैमिश असें नांव ठेवून ऋषि तेथें तपश्चर्येला बसले.

२ सूत हें पुराणवक्त्याचें नांव आहे. आणि ब्राह्मणीस्त्रीचे ठायीं क्षत्रियापासून जो पुत्र उत्पन्न होतो त्यालाही सूत असें ह्मणतात. परंतु हा सूत तसा संकरजातीय नसून याचें जन्म पवित्र आहे. हा रोमहर्षणाचापुत्र याचें नांव उग्रश्रवा. हा भगवान् व्यासाच्या पट्टशिष्यांपैकीं मुख्य होय. व्यासानें जीं पुराणें केलीं तीं सर्व यालाच शिकविलीं होतीं, व हा तीं ऋषींस सांगत असे.

नंतर या लोकीं नारदानें लक्षपूर्वक पाहिलें, तों सर्व मनुष्यें अनेक प्रकारच्या क्लेशांनीं पीडित झालीं आहेत. ब्राह्मण, क्षत्रिय, वैश्य इत्यादि अनेक जातींत उत्पन्न होऊन आपापल्या पूर्वकर्मानें क्लेश भोगीत आहेत; असें पाहून नारदाला त्यांची फार दया आली ॥ ५ ॥ आणि कोणता उपाय केला असतां ह्या प्राण्यांच्या दुःखाची खात्रीपूर्वक शांति होईल; असा विचार त्याच्या मनांत आला, पण तो उपाय सुचेना, तेव्हां

ततोदृष्ट्वाजनान्सर्वान्नानाक्लेशसमन्वितान् ॥ नानायोनिसमुत्पन्नान्क्लिश्यमानान्स्वकर्मभिः ॥ ५ ॥ केनोपायेनचैतेषांदुःखनाशोभवेद्ध्रुवं ॥ इतिसंचिंत्यमनसाविष्णुलोकंगतस्तदा ॥६॥ तत्रनारायणंदेवंशुक्लवर्णंचतुर्भुजं ॥ शंखचक्रगदापद्मवनमालाविभूषितं॥७॥

जगाचें पालन करणाऱ्या विष्णूलाच जाऊन विचारावें ह्मणून तो नारद वैकुंठलोकाला गेला ॥ ६ ॥ तेथें भगवान् नारायण त्याच्या दृष्टीस पडला. तो मोठा प्रकाशमान् गौरवर्ण व चारी हातांत शंख, चक्र, गदा आणि पद्म हीं धारण केलीं असून वनमालेनें (पायांपर्यंत लोंबणाऱ्या मालेनें) शोभायमान आहे ॥ ७ ॥

---

१ सत्व, रज आणि तम असे मायेचे तीन गुण आहेत. व त्यांचा पांढरा, पिंवळा आणि काळा वर्ण आहे असें वर्णन केलें आहे. विष्णु हा सत्वगुणाची उपाधि धारण करतो ह्मणन त्याचा वर्ण पांढरा होता असें समजावें

असा जो सर्वदेवतांचा ईश भगवान् विष्णु त्याला पाहून नारदऋषि त्याची स्तुति करण्याला आरंभ करता झाला. नारद ह्मणाला, 'वाणी आणि मन यांच्या पलीकडे ज्याचें रूप आहे व ज्याच्या शक्ती अनंत आहेत ॥८॥ आदि, मध्य आणि अंत ज्याला नाहींत, स्वतः निर्गुण असून गुणांचा चालक, सर्व प्राणिमात्रांच्या

दृष्ट्वातंदेवदेवेशंस्तोतुंसमुपचक्रमे ॥ नारदउ०॥ नमोवाङ्मनसातीतरूपायानंतशक्तये ॥ ८ ॥ आदिमध्यांतहीनायनिर्गुणायगुणात्मने ॥ सर्वेषामादिभूतायभक्तानामार्तिनाशिने ॥९॥ श्रुत्वास्तोत्रंततोविष्णुर्नारदंप्रत्यभाषत ॥ श्रीभगवानुवाच ॥ ॥ किमर्थमागतोसित्वंकिंतेमनसिवर्तते ॥ १० ॥

प्रथम असणारा, आणि भक्तांची पीडा नाश करणारा, अशा हे भगवंता, तुला नमस्कार असो ॥९॥ याप्रमाणें नारदानें केलेलें स्तोत्र ऐकून भगवान् नारदाला ह्मणाले, नारदा, तूं निष्कारण कधीं यावयाचा नाहींस यावेळीं आला आहेस तो कांहीं तरी कार्य योजून आला असशील, तर कशाकरितां आलास व तुझ्या मनांत काय आहे तें सांग ॥ १० ॥

हे महाभागा, तुला जें काय विचारावयाचें असेल तें खुशाल विचार; मी सर्व तुला सांगतों. भगवंताचें वाक्य ऐकून नारद ह्मणाला, मी फिरत फिरत मनुष्यलोकांत गेलों होतों, तेथें प्राणिमात्रांची स्थिति कशी आहे ती पाहिली, तों ते अनेक दुःखांनीं युक्त आहेत. अनेक योनींत जन्म धारण करून आपल्या पापक-

कथयस्वमहाभागतत्सर्वंकथयामितें ॥ ॥ नारदउवाच ॥ ॥ मर्त्यलोकेजनाःसर्वे नानाक्लेशसमन्विताः ॥ नानायोनिसमुत्पन्नाःपच्यंतेपापकर्मभिः ॥ ११ ॥ तत्कथंशमयेन्नाथलघूपायेनतद्वद॥श्रोतुमिच्छामितत्सर्वंकृपास्तियदितेमयि ॥१२॥ श्रीभगवानुवाच ॥ साधुपृष्टंत्वयावत्सलोकानुग्रहकांक्षया ॥ यत्कृत्वामुच्यतेमोहा त्तच्छृणुष्ववदामिते ॥ १३ ॥

र्मांनीं दुःखाग्नींत भाजताहेत ॥ ११ ॥ तेव्हां हे नाथा, लहानसा कोणता उपाय केल्यानें त्यांच्या दुःखाची शांति होईल, असा कांहीं उपाय सांगा. जर माझ्यावर आपली कृपा असेल तर त्यांचें दुःख निवारण हो-ण्यासारखा अगदीं सुलभ उपाय सांगा, मी तें सर्व ऐकण्याची इच्छा करीत आहें ॥१२॥ नारदाचा प्रश्न ऐ-कून भगवान् ह्मणाले, वत्सा नारदा, त्वां चांगला प्रश्न केलास. लोकांवर अनुग्रह करण्याची तुझी इच्छा

आहे; तर जो उपाय केल्यानें प्राणिमात्र दुःखापासून मुक्त होतील तो मी तुला सांगतो ऐक॥१३॥ एक मोठें पुण्यकारक व्रत आहे तें स्वर्ग व मृत्युलोक यांत मुळींच कोणाला माहीत नाहीं. तुझ्यावर माझा स्नेह आहे ह्मणून मी यावेळीं तें प्रकट करतों ॥ १४ ॥ सत्यनारायणनांवाच्या देवाचें असें व्रत आहे कीं, जें यथा-

व्रतमस्तिमहत्पुण्यंस्वर्गेमर्त्येचदुर्लभं॥तवस्नेहान्मयावत्सप्रकाशःक्रियतेऽधुना॥१४॥ सत्यनारायणस्यैवंव्रतंसम्यग्विधानतः॥ कृत्वासद्यः सुखं भुक्त्वापरत्रमोक्षप्राप्नुयात् ॥ १५ ॥ तच्छ्रुत्वाभगवद्वाक्यंनारदोमुनिरब्रवीत् ॥ नारद० ॥ किंफलंकिंविधानंचकृतंकेनैवतद्व्रतम् ॥ १६ ॥ तत्सर्वंविस्तराद्ब्रूहिकदाकार्यंहितद्व्रतम् ॥ श्रीभगवानुवाच ॥ दुःखशोकादिशमनंधनधान्यप्रवर्द्धनम् ॥ १७॥

विधि भक्तिपूर्वक केलें असतां, तत्काल इहलोकीं सुखाची प्राप्ति होऊन देहांतीं मोक्षहि मिळेल॥ १५ ॥ हें भगवंताचें वाक्य ऐकून नारदऋषि पुनः ह्मणाला, सत्यनारायणाचें व्रत आहे असें आपण सांगितलें, पण त्याचें फळ काय ? तें करावें कसें ? व पूर्वीं कोणी केलें होतें? ह्मणजे त्याचा अनुभव कोणास कसा आला ॥१६॥तें सर्व विस्तारपूर्वक सांगा. आणि तें व्रत केव्हां करावें तेंही सांगा. असा नारदाचा प्रश्न ऐकून

भगवान् ह्मणाले, नारदा, दुःख व शोक इत्यादिकांचा परिहार करणारें धनधान्यादिकांची वृद्धि करणारें॥ १७॥
स्त्रियांचें सौभाग्य वाढविणारें, संतति देणारें आणि सर्वत्र विजय देणारें असें तें व्रत आहे. हें मी तुला त्याचें
फळ सांगितलें. त्याला इतर व्रतांप्रमाणें कालनियम नाहीं. मनुष्याचें ज्या कोणत्याही दिवशीं भक्तिश्रद्धा-
युक्त अंतःकरण होईल त्या दिवशीं त्यानें ॥ १८ ॥ सत्यनारायणदेवाची प्रदोषकाळीं पूजा करावी

सौभाग्यसंततिकरंसर्वत्र विजयप्रदं ॥ यस्मिन्कस्मिन्दिनेमर्त्योभक्तिश्रद्धासमन्वितः १८
सत्यनारायणंदेवंयजेच्चैवनिशामुखे ॥ ब्राह्मणैर्बांधवैश्चैवसहितोधर्मतत्परः ॥ १९ ॥ नै-
वेद्यंभक्तितोदद्यात्सपादंभक्ष्यमुत्तमं ॥ रंभाफलंघृतंक्षीरंगोधूमस्यचचूर्णकम् ॥ २० ॥

“हें व्रत मुख्यत्वें पुण्यकारक नदीच्या कांठीं मंडप वगैरे देऊन तेथें करावें. अथवा पवित्र देवालयांत अ-
थवा रम्य व पवित्र अशा कोणत्याही दुसऱ्या ठिकाणीं करावें. तसें करण्यास अनुकूलता नसेलच तर
मात्र आपल्या घरीं करावें.” पूजेच्या वेळीं विद्वान् ब्राह्मण, आपले आप्त, इष्टमित्र यांना सन्निध घ्यावें. अं-
तःकरण केवळ धर्मविषयीं तत्पर असावें. ॥ १९ ॥ याप्रमाणें सत्यनारायणाची पूजा करून त्याला भक्ति-

पूर्वक नैवेद्य सपाद ( सवाईमानानें ) अर्पण करावा, त्यांत सर्व पदार्थ सपाद ह्मणजे सवाईमानानें असावेत ते हे कीं, केळें, तूप, दूध, आणि गव्हांचा रवा. कदाचित् गव्हांचा रवा न मिळाला तर तांदुळांचा रवा घ्यावा व साखर घ्यावी. साखर न मिळेल तर गूळ घ्यावा. याप्रमाणें हे सर्व पदार्थ सवाईमानानें एकत्र करून त्यांचा पाक करून त्याचा नैवेद्य सत्यनारायणदेवाला दाखवावा. ॥ २१ ॥ नंतर

अभावेशालिचूर्णंवाशर्कराचगुडस्तथा ॥ सपादंसर्वभक्ष्याणिचैकीकृत्यनिवेदयेत्. ॥२१॥ विप्रायदक्षिणांदद्यात्कथांश्रुत्वाजनैःसह ॥ ततश्चबंधुभिःसार्द्धंविप्रांश्चप्रतिभोजयेत् ॥ २२ ॥ सपादंभक्षयेद्भक्त्यानृत्यगीतादिकंचरेत् ॥ ततश्चस्वगृहंगच्छेत्सत्यनारायणंस्मरन् ॥ २३ ॥

यथासांग पूजा समाप्त करून ब्राह्मणांला दक्षिणा द्यावी, व आप्त इष्टमित्रादिकांसह कथा श्रवण करावी. नंतर आपल्या आप्तांसह ब्राह्मणांला भोजन द्यावें. ॥ २२ ॥ व सर्वांनां तीर्थ, प्रसाद देऊन आपणही सपाद भक्षण करावा. ती रात्र ईश्वरपर गायन, नृत्य, वाद्यें वाजविणें इत्यादिकांनीं घालवावी. आणि प्रा-

१ येथें सपाद असें सांगीतलें आहे, यांत कांहीं विशेष हेतु असला पाहिजे. सामान्यतः कोणताही पदार्थ वाढत्या स्थितींत अस-

तःकाळीं मोठ्या आनंदानें सत्यनारायणाचें स्मरण करीत आपल्या घरीं जावें. ॥ २३ ॥ याप्रमाणें हें व्रत भक्तिपूर्वक केलें असतां, मनुष्यमात्राचे इच्छितमनोरथ खचीत सिद्ध होतील. हें व्रत कृत, त्रेता, द्वापार आणि कलि या चारही युगांत करण्याला योग्य असून, तें कर्त्याचे मनोरथ पूर्ण करील. कलियुगांत विशेषतः मनोरथ सिद्ध करून देणारा लहान व सुलभ असा हाच एक उपाय आहे. ॥ २ ॥ इति श्रीरेवाखंड

एवंकृतेमनुष्याणांवांछासिद्धिर्भवेद्ध्रुवं ॥ विशेषतःकलियुगेलघूपायोस्तिभूतले ॥
॥ २४ ॥ इतिश्रीस्कंदपुराणेरेवाखंडेसत्यनारायणकथायांप्रथमोऽध्यायः ॥ १ ॥
॥ सूतउ० ॥ अथान्यत्संप्रवक्ष्यामिकृतंयेनपुराद्विज ॥ कश्चित्काशीपुरेरम्येह्यासी-द्विप्रोऽतिनिर्द्धनः ॥ १ ॥

सत्यनारायण कथायां महाराष्ट्रविवृतौ प्रथमोऽध्यायः ॥१॥ ॥श्रीः "याप्रमाणें नारदाला भगवान् विष्णूनें लोकांच्या दुःखाचें निवारण करण्याचा सुलभ उपाय जें सत्यनारायणाचें व्रत तें सांगितलें व त्याचें विधानही

---

णें हें शुभ असें मानलें आहे. कोणाला आशिर्वाद द्यावयाचा झाला तर "साग्रं वर्षं शतं जीव" ह्मणजे सव्वाशें वर्षें वांच असें ह्मणतात. यावरून वाढतें प्रमाण विशेष मंगलकारक आहे, ह्मणून सव्वा हें प्रमाण घेतलें आहे.

सांगितलें. आतां हें व्रत पूर्वीं कोणीं केलें होतें तें सांगावें असें नारदानें भगवान् विष्णूला विचारलें होतें, त्याप्रमाणें विष्णूनें त्याला जी कथा सांगितली होती, तीच सूत शौनकादिऋषींना सांगतो आहे. सूत ह्मणाला, ऋषीहो, व्रत व त्याचें विधान तर तुह्मीं ऐकिलेंच आतां तें पूर्वीं कोणीं केलें होतें तें सांगतों. काशीनांवाच्या प्रसिद्ध नगरींत एक ब्राह्मण अतिशय दरिद्री होता. त्याला पोटाला अन्न

क्षुत्तृड्भ्यांव्याकुलोभूत्वानित्यंबभ्रामभूतले ॥
दुःखितंब्राह्मणंदृष्ट्वाभगवान्ब्राह्मणप्रियः ॥ २ ॥

देखील मिळत नव्हतें. ॥ १ ॥ प्रतिदिवशीं तो भुकेनें आणि तान्हेनें व्याकुळ होत्साता घरोघर भिक्षा मागत फिरे, तरी दुर्दैवानें त्याला पोट भरेल इतकी भिक्षा देखील मिळत नसे. एकेदिवशीं तो भिक्षा मागत

---

१ जसें औषध रोगाचा परिहार करतें, तशींच व्रतें वगैरे कर्में दुःखांचा परिहार करतात, तेव्हां हीं एकप्रकारचीं औषधेंच आहेत. औषधाविषयीं— जसें त्या अमक्या मनुष्यानें अमक्या विकारावर अमुक औषध घेतलें होतें त्यानें त्याचा तो विकार दूर झाला, असें समजलें ह्मणजे तें घेण्याविषयीं दुसऱ्या लोकांची विशेष प्रवृत्ति होते, तसेंच व्रतरूपी औषध कोणीं केलें व त्याला कसा गुण आला, हें समजलें ह्मणजे लोकांची विशेष श्रद्धा बसेल, ह्मणून ही कथा पुढें सांगितली आहे. नाहीं तर व्रताचें विधान सांगितलें तेवढ्यानेंच पूर्णता झाली; पुढें ती कथा सांगण्याचे कांहीं कारण नव्हतें.

फिरत असतां, आपल्या स्थितीचा विचार करून फार दुःखित झाला व त्याला आपल्या जिवाचा अतिशय कंटाळा आला अशावेळीं वैतागलेल्या त्या ब्राह्मणावर अनुग्रह करावा ह्मणून, ज्याला ब्राह्मण फार प्रिय आहेत असा जो भगवान् सत्यनारायण तो ॥ २ ॥ वृद्ध ब्राह्मणाचें रूप धारण करून त्या ब्राह्मणाजवळ प्रकट होऊन आदरपूर्वक त्याला प्रश्न करिता झाला. वृद्धब्राह्मणरूपी सत्यनारायण ह्मणाला,

वृद्धब्राह्मणरूपस्तंपप्रच्छद्विजमादरात् ॥ किमर्थंभ्रमसेविप्रमहींनित्यंसुदुःखितः ॥ ॥ ३ ॥ तत्सर्वंश्रोतुमिच्छामिकथ्यतांद्विजसत्तम ॥ ब्राह्मणउवाच ॥ ब्राह्मणोऽतिदरिद्रोऽहंभिक्षार्थंवैभ्रमेमहीम् ॥ ४ ॥ उपायंयदिजानासिकृपयाकथयप्रभो ॥ वृद्धब्राह्मणउवाच ॥ सत्यनारायणोविष्णुर्वांच्छितार्थफलप्रदः ॥ ५ ॥

हे विप्रा, तूं प्रतिदिवशीं अत्यंत दुःखित होत्साता ह्या पृथ्वीवर कां फिरत असतोस? ॥ ३ ॥ त्याचें सर्व कारण ऐकावें अशी माझी इच्छा आहे, तर हे द्विजश्रेष्ठा, काय असेल तें सांग. हा प्रश्न ऐकून ब्राह्मण ह्मणाला, महाराज, काय विचारितां ? मी अत्यंत दरिद्री असा ब्राह्मण आहें. भिक्षेकरितां पृथ्वीवर संचार करतों, पण पोटभर भिक्षा देखील मिळत नाहीं, यामुळें फार दुःखी झालों आहें ॥ ४ ॥ आतां ह्या दुःखांतून मुक्त होण्याविषयीं कांहीं उपाय असला, तर हे प्रभो, मला कृपा करून सांगा. हें ऐकून वृद्ध-

ब्राह्मणरूपी सत्यनारायण ह्मणाला, ब्राह्मणा, भगवान् सत्यनारायण हा इच्छितकामना पूर्ण करून उत्तम फल देणारा आहे. ॥ ५ ॥ त्याची तूं पूजा कर. त्याचें व्रत उत्तम प्रकारें कर. तें व्रत केलें असतां मनुष्य सर्वदुःखांपासून मुक्त होतो. ॥ ६ ॥ वृद्धब्राह्मणरूपी सत्यनारायणाचें हें वाक्य ऐकून तो दरिद्री ब्राह्मण मोठा उपकारी होऊन त्यानें त्याचे पाय धरिले आणि सत्यनारायणाच्या व्रताचें विधान सांगण्याविषयीं

तस्यत्वंपूजनंविप्रकुरुष्वव्रतमुत्तमम् ॥ यत्कृत्वासर्वदुःखेभ्योमुक्तोभवतिमानवः ॥ ॥ ६ ॥ विधानंचव्रतस्यापिविप्रायाभाष्ययत्नतः ॥ सत्यनारायणोवृद्धस्तत्रैवांतरधीयत ॥ ७ ॥ तद्व्रतंसंकरिष्यामियदुक्तंब्राह्मणेनवै ॥ इतिसंचिंत्यविप्रोसौरात्रौनिद्रां नलब्धवान् ॥ ८ ॥

प्रार्थना केली. तेव्हां भगवान् सत्यनारायणानें त्याला तें व्रत कसें करावयाचें त्याचा विधी सांगून तो वृद्धब्राह्मणरूपी भगवान् तेथेंच गुप्त झाला. ॥ ७ ॥ याप्रमाणें त्या दरिद्री ब्राह्मणानें सत्यनारायणव्रताचें विधान व त्याची फलश्रुति ऐकिली, तेव्हां त्यानें तें व्रत करावयाचें असा मनांत संकल्प करून, तो फिरत फिरत आपल्या राहण्याच्या ठिकाणीं गेला. त्याला तें व्रत करण्याची इतकी उत्कंठा लागली होती

कीं, त्या रात्रींत त्याला मुळींच झोंप लागली नाहीं. केंव्हां उजाडेल आणि केंव्हां मी तें व्रत करीन असें त्याला झालें होतें. ॥ ८ ॥ शेवटीं एकदांचें उजाडलें, तसा तो ब्राह्मण आज सत्यनारायणाचें व्रत करावयाचें असा संकल्प करून भिक्षेला निघाला. ॥ ९ ॥ प्रतिदिवशीं त्याला पोटभर भिक्षामिळण्याची पंचाईत पडे; पणत्या दिवशीं तो ज्या ज्या घरीं भिक्षेला गेला त्या त्या घरीं त्याला आदरपूर्वक पुष्कळ

ततःप्रातःसमुत्थायसत्यनारायणव्रतम् ॥ करिष्यइतिसंकल्प्यभिक्षार्थमगमद्द्विजः ॥ ॥ ९ ॥ तस्मिन्नेवदिनेविप्रःप्रचुरंद्रव्यमाप्तवान् ॥ तेनैवबंधुभिःसार्द्धंसत्यस्यव्रतमाचरत् ॥ १० ॥ सर्वदुःखविनिर्मुक्तःसर्वसंपत्समन्वितः ॥ बभूवसद्विजश्रेष्ठोव्रतस्यास्यप्रभावतः ॥ ११ ॥

भिक्षा मिळाली तेव्हां त्यानें भिक्षेचें द्रव्य तें घेऊन त्याचदिवशीं आपल्या आप्त, इष्टमित्रांला बोलावून भक्तिपूर्वक यथाविधि सत्यनारायणाचें व्रत केलें. ॥ १० ॥ नंतर त्या व्रताच्या प्रभावानें तो सर्व दुःखांपासून मुक्त झाला. व सर्वप्रकारचें ऐश्वर्य त्याच्या घरीं भरलें. याप्रमाणें ज्याला प्रतिदिवशीं पोटभरण्याची काळजी पडत होती, तो ब्राह्मण सत्यनारायणाच्या कृपेनें मोठा श्रीमंत होऊन प्रतिष्ठित झाला.॥११॥

त्या दिवसापासून तो प्रतिमहिन्यास पौर्णिमेचे दिवशीं सत्यनारायणाचें व्रत करीत असे. याप्रमाणें तो द्विजोत्तम आमरणपर्यंत प्रतिमासीं व्रत करीतअसे ह्मणून त्या व्रताच्या प्रभावानें इहलोकीं अत्यंत सुखाचा उपभोग घेऊन, ॥ १२ ॥ सर्व पापांपासून मुक्त होत्साता अंतीं दुर्लभ अशा मोक्षाला प्राप्त झाला. सूत

ततःप्रभृतिकालंचमासिमासिव्रतंकृतं॥एवंनारायणस्येदंव्रतंकृत्वाद्विजोत्तमः ॥१२॥ सर्वपापविनिर्मुक्तोदुर्लभंमोक्षमाप्तवान् ॥ व्रतमस्ययदाविप्रपृथिव्यांसंकरिष्यति ॥ ॥ १३ ॥ तदैवसर्वदुःखंचमनुजस्यविनश्यति ॥ एवंनारायणेनोक्तंनारदायमहात्मेन ॥ मयातत्कथितंविप्राःकिमन्यत्कथयामिवः ॥ १४ ॥ ऋषयऊचुः ॥ तस्माद्विप्राच्छ्रुतंकेनपृथिव्यांचरितंमुने॥तत्सर्वंश्रोतुमिच्छामःश्रद्धास्माकंप्रजायते ॥१५॥

ह्मणाला, हे ब्राह्मणहो, हें सत्यनारायणाचें व्रत ह्या पृथ्वीवर जेव्हां सर्व लोक करूं लागतील ॥ १३ ॥ तेव्हांच मनुष्य मात्राचें सर्व दुःख नष्ट होऊन ते सुखाला प्राप्त होतील. याप्रमाणें भगवान् नारायणानें महात्मा नारदमुनि याला जें व्रत सांगितलें, तेंच हे ब्राह्मणहो, मीं तुह्माला निवेदन केलें आहे. आतां आणखीं काय ऐकण्याची तुमची इच्छा आहे तें सांगा. ॥ १४ ॥ याप्रमाणें सूताचें भाषण ऐकून शौनकादिकऋषि ह्मणाले,

सूता, काशीपुरींत ज्या ब्राह्मणाला स्वयमेव सत्यनारायणदेवानें या व्रताचा उपदेश केला, त्या ब्राह्मणापासून या पृथ्वीवर हें व्रत कोणी ऐकिलें व त्या प्रमाणें केलें तें सर्व ऐकण्याची आह्मास श्रद्धापूर्वक इच्छा झाली आहे. ॥ १५ ॥ याप्रमाणें ऋषींचा प्रश्न ऐकून सूत ह्मणाला, मुनीहो, त्या ब्राह्मणापासून ऐकून घेऊन हें व्रत पृथ्वीवर कोणी केलें, तें सर्व मी तुह्मांला सांगतों. श्रवण करा. एकेसमयीं तो ब्राह्मण, आपल्या

॥ सूतउवाच ॥ शृणुध्वंमुनयःसर्वेव्रतंयेनकृतंभुवि ॥ एकदासद्विजवरोयथाविभवविस्तरैः ॥ १६ ॥ बंधुभिःस्वजनैःसार्द्धंव्रतंकर्तुंसमुद्यतः ॥ एतस्मिन्नंतरेकालेकाष्ठक्रेतासमागमत् ॥ १७ ॥ बहिःकाष्ठंचसंस्थाप्यविप्रस्यगृहमाययौ ॥ तृष्णयापीडितात्माचदृष्ट्वाविप्रंकृतव्रतं ॥ १८ ॥

ऐश्वर्यानुरूप व्रत करायला प्रवृत्त झाला होता. ॥ १६ ॥ आप्त, इष्टमित्र यांसहवर्तमान त्यानें मोठ्या आनंदानें व्रताला आरंभ केला. इतक्यांत एक लांकडें विकणारा गरीब मनुष्य डोक्यावर लांकडाची मोळी घेऊन तेथें प्राप्त झाला. ॥ १७ ॥ तों त्याला बहुत तहान लागली ह्मणून त्याणें आपल्या डोक्यावरची मोळी उतरून दरवाज्याचा बाहेर भिंतीला टेंकून ठेवून आपण पाणी पिण्याकरितां त्या ब्राह्मणाच्या घरीं गेला तों

तो ब्राह्मण व्रत करायला बसला आहे असें पाहून ॥ १८ ॥ तो लांकडें विकणारा त्या ब्राह्मणाला मोठ्या नम्रतेनें नस्मकार करून, ह्मणाला, भटजीमहाराज, आपण हें काय करीत आहां? आणि हें केलें तर यापासून काय फल प्राप्त होतें तें कृपा करून विस्तारपूर्वक मला सांगा. ॥ १९ ॥ असा त्या लांकडें-विकणाराचा प्रश्न ऐकून तो ब्राह्मण ह्मणाला, अरे, सर्व इच्छितफलदेणारें असें हें सत्यनारायणाचें व्रत

प्रणिपत्यद्विजंप्राहकिमिदंक्रियतेत्वया ॥ कृतेकिंफलमाप्नोतिविस्तराद्वदमेप्रभो॥१९॥
॥ विप्रउवाच ॥ सत्यनारायणस्येदंव्रतंसर्वेप्सितप्रदं ॥ तस्यप्रसादान्मेसर्वंधनधान्या
दिकंमहत् ॥ २० ॥ तस्मादेतद्व्रतंज्ञात्वाकाष्ठक्रेतातिहर्षितः ॥ पपौजलंप्रसादंचभु
क्त्वासनगरंययौ ॥ २१ ॥

मी करीत आहें. पूर्वीं मी किती दरिद्री होतों तें तुला ठाउक नाहीं काय? आज जें हें मोठें एश्वर्य तुला दिसतें आहे, हें सारें ह्या सत्यनारायणाच्या प्रसादानें प्राप्त झालें आहे. ॥ २० ॥ याप्रमाणें त्या ब्राह्मणाचें वचन ऐकून मोळीविक्याच्या मनाची खात्री झाली. व केवळ व्रताच्या प्रभावानेंच एवढें मोठें एश्वर्य प्राप्त होतें हें ऐकून त्याला अत्यंत हर्ष झाला. नंतर त्या ब्राह्मणापासून पाणी मागून घेऊन प्याला, आणि

स्वस्थपणें त्यानें त्या व्रताचा सर्वप्रकार लक्षपूर्वक पाहिला, भक्तिपूर्वक कथा ऐकिली व प्रसाद भक्षण केला. आणि नंतर त्या ब्राह्मणाचा निरोप घेऊन शहरांत लांकडें विकण्याकरितां निघून गेला. ॥ २१ ॥ तो लांकडेंविकणारा अर्थात् अतिशय दरिद्रीच होता. त्याच्या जवळ द्रव्य कोठलें असणार ? तरी सत्यनारायणदेवाच्या चरणाचें मनांत चिंतन करून त्यानें असा विचार केला कीं, आज ही मोळी विकून जें

सत्यनारायणंदेवंमनसाइत्यचिंतयत् ॥ काष्ठंविक्रयतोग्रामेप्राप्यतेचाद्ययद्धनं॥२२॥
तेनैवसत्यदेवस्यकरिष्येव्रतमुत्तमम् ॥ इतिसंचिंत्यमनसाकाष्ठंकृत्वातुमस्तके॥२३॥
जगामनगरेरम्येधनिनांयत्रसंस्थितिः ॥ तद्दिनेकाष्ठमूल्यंचद्विगुणंप्राप्तवानसौ॥२४॥
ततःप्रसन्नहृदयःसुपक्वंकदलीफलं ॥ शर्कराघृतदुग्धेचगोधूमस्यचचूर्णकं ॥ २५ ॥

कांहीं द्रव्य प्राप्त होईल, ॥ २२ ॥ तेवढें खर्च करून मी सत्यनारायणाचें उत्तम व्रत करीन. याप्रमाणें संकल्प करून मस्तकावर लांकडांचा भारा घेऊन, ॥ २३ ॥ मोठे मोठे श्रीमान् लोक ज्या आळींत रहात होते तेथें गेला. सत्यनारायणाच्या कृपेनें त्यादिवशीं त्याला नित्यापेक्षां त्या मोळीची किंमत दुप्पट आली. ॥ २४ ॥ तेव्हां तो त्या पैशांचें बाजारांतून पिकलेलीं केळीं, साखर, तूप, दूध, कणीक, ॥ २५॥

हें सर्व सामान घेऊन आपल्या घरीं गेला, आणि ते सर्व पदार्थ सव्वापटीनें एकत्र करून त्याचा नैवेद्य तयार केला. आपल्या आप्त, इष्टमित्रांला बोलावून त्यांसहवर्तमान यथाविधी भक्तिपूर्वक त्यानें तें व्रत केलें. ॥ २६ ॥ नंतर त्या व्रताच्या प्रभावानें त्याला पुष्कळ द्रव्य व संततीही प्राप्त झाली आणि इह-

कृत्वैकत्रसपादंचगृहीत्वास्वगृहेययौ ॥ ततोबंधून्समाहूयचकारविधिनाव्रतं॥२६॥
तद्व्रतस्यप्रभावेणधनपुत्रान्वितोऽभवत् ॥ इहलोकेसुखंभुक्त्वाचांतेसत्यपुरंययौ ॥
॥ २७ ॥ इतिसत्यनारायणकथायांद्वितीयोध्यायः ॥ २ ॥ ॥ सूतउ० ॥ पुनरग्रे
प्रवक्ष्यामिशृणुध्वंमुनिसत्तमाः ॥ पुराचोल्कामुखोनामनृपश्चासीन्महीपतिः ॥१॥
जितेंद्रियःसत्यवादीययौदेवालयंप्रति॥दिनेदिनेधनंदत्वाद्विजान्संतोषयन्सुधीः ॥२॥

लोकीं उत्तम सुखाचा अनुभव घेऊन, अंतीं सत्यनारायणाच्या लोकाला अर्थात् वैकुंठाला जाता झाला, ॥ ॥ २७ ॥ इति श्रीरेवाखंडे सत्यनारायणकथायां महाराष्ट्रविवृतौ द्वितीयोऽध्यायः ॥ २ ॥ ॥ सूत ह्मणाला, मुनिश्रेष्ठहो, आणखी तुह्माला इतिहास सांगतों तो श्रवण करा. पूर्वी उल्कामुखनांवाचा एक मोठा राजा होता. ॥ १ ॥ तो जितेंद्रिय असून सत्य भाषण करणारा होता. प्रतिदिवशीं ब्राह्मणांला पुष्कळ द्रव्य

देऊन, प्रसन्न करीत असे. तो एके दिवशीं एका देवालयांत प्राप्त झाला. ॥ २ ॥ त्या वेळीं त्याच्या बरोबर अत्यंत सुंदर व कमलासारखें जिचें मुख शोभत आहे, अशी भद्रशीला नांवाची त्याची स्त्री होती. तो ज्या देवालयांत गेला होता, तें नदीच्या तीरावर होतें. राजाला सत्य नारायणाच्या व्रताचा प्रभाव माहीत होता, ह्मणून तो त्या दिवशीं मोठ्या थाटामाटानें भक्तिपूर्वक व्रत करायुला बसला ॥ ३ ॥ इतक्यांत त्या नदींतून जहाजांत बसून देशांतराला व्यापाराकरितां निघालेला एक

भार्यातस्यप्रमुग्धाचसरोजवदनासती ॥भद्रशीलानदीतीरेसत्यस्यव्रतमाचरत् ॥३॥
एतस्मिन्नंतरेतत्रसाधुरेकःसमागतः ॥ वाणिज्यार्थंबहुधनैरनेकैःपरिपूरितः ॥ ४ ॥
नावंसंस्थाप्यतत्तीरेजगामनृपतिंप्रति॥दृष्ट्वासव्रतिनंभूपंपप्रच्छविनयान्वितः ॥ ५ ॥

वाणी तेथें प्राप्त झाला. त्यानें आपल्या नावेंत अनेक प्रकारच्या व्यापाराच्या उत्तम उत्तम जिनसा भरल्या होत्या. ॥ ४ ॥ राजा जेथें व्रत करीत होता, तें देवालय नदीच्या अगदीं किनाऱ्यावर होतें, यामुळें वाण्याला आंत कांहीं गडबड चालली आहे असें दिसल्यावरून काय आहे तें पहावें; ह्मणून तो ती नाव किनाऱ्याला लावून आपण खालीं उतरला आणि राजाच्या भेटीला गेला. हा वाणी मोठा नांवालौकिकाचा असून संपन्न होता. व कांहीं व्यापाराचे निमित्तानें राजाशीं त्याची ओळख होती,

